धार्मिकैः सर्वथैव नोपेक्षितव्या, तदर्थं प्राप्तानि दुःखान्यपि सहेरन्नेवेति शिक्षणार्थं स्वस्मिन्नसन्त्यपि दुःखानि दर्शितानीति प्रथमे पक्षे। द्वितीये तु सीताविरहकृतानि विषादादीनि कुतो दुःखानि, किन्तु प्रेम्णः स्थायिभावस्य विप्रलम्भनरसास्वादनजनितानि दुःखत्वेन भासमानानि परमसुखान्येव न तु दुःखानीत्यर्थः। आत्मारामत्वदुःखित्वयोर्युगपदेकत्र विरोधात्। न च सीतायां रममाणस्य कुत आत्मारामत्वमिति वाच्यं सीतायाः स्वरूपशक्तित्वेनात्मभूतत्वात्। ननु सीतायाः स्वरूपभूतत्वे कथं तद्विरहः सम्भवेत् उच्यते, एकमेव परमतत्त्वं चिच्छक्तिवृत्तिभेदेन महासारेण प्रेमाख्येनानादित एव द्विधा विभक्तं तिष्ठति, ह्लादषडैश्वर्यमयं केवलं ह्लादमयं च प्रथमं परमेश्वराख्यं द्वितीयं भक्त्याख्यं, पुनश्च तेनैव प्रेम्णा स्वस्य चतसृभिर्वृत्तिभिर्द्वितीयं तत्त्वं चतुर्द्धा विभक्तं दाससखिपित्रादिप्रेयस्याख्यं प्रथमस्य तदेव तत्त्वस्य दास्यादिभावभावितत्वं व्यवस्थापितं प्राकृतेष्वपि जीवेषु यदृच्छयैतादृश-भक्तिसाधनवस्तु भक्तिपरिपाके स्वयमाविर्भूय एतच्चतुष्कमावेश्य तेऽपि दासादित्वेन यथाकालं प्राप्य चतुष्केण तेन समनुगम्यते पुनरपि तेनैव प्रेम्णा स्थायिभावतां प्राप्तेन स्वशक्त्यैवाविर्भावितभिर्विभावादिभिः स्वं रसरूपीकृत्य तदेव तत्त्वयुगलं स्वस्य विषयाश्रयीभावभावितं कृत्वा स्वाधीनीकृत्य योगवियोगाभ्यां सुखदुःखादितं स्वमाधुर्यमसाधारणमपारमास्वादयता कोऽप्यानन्दचमत्कार एव तद्विदां निष्पाद्यते। अतद्विदां तु केषाञ्चित् रामकृष्णादीनामप्येतावद्दुःखमनिर्वाच्यमिति केषांचिज्जीव-प्रदर्शनायै अनुकृतमित्येवं व्यामोह एव ॥ ५ ॥ ❀ ❀ तस्य प्रेमवश्यत्वसत्यव्रतत्वब्रह्मण्यत्वादिभिरप्राकृतैर्गुणैरेव एतदुपपद्यते नान्यथेत्याह नेति। स वै खलु त्रिलोक्यां न सक्तः यत आत्मा परमात्मा तदपि आत्मवतामात्मा सेव्यत्वेन वर्त्तते येषां तेषां दासादीनां सुहृत्तमः यतो भगवान् पूर्णषडैश्वर्यः अतः प्रेमवश्यत्वानङ्गीकारे प्राकृतानामिव स्त्रीकृतं कश्मलं मोहं नाऽनुवीत त्यक्तुं नार्हेत्। तथा हि देवदूतेन श्रीरामं मन्त्रयता विज्ञापितम्—अत्रागतस्त्वया वध्य इति तदैव द्वारि स्थितं लक्ष्मणं दुर्वाससं विज्ञापयितुं प्रविष्टं हन्तुमुद्यतो वशिष्ठवाक्यात्तत्याजेति तस्मादेतादृश्या लीलया प्रेमाणं धर्मं च शिक्षयायामासेति युक्तमुक्तं मर्त्यशिक्षण-मिति ॥ ६ ॥ ❀ ❀ तत्तत्सर्वगुणाकरस्य तस्य कृपाया निरुपाधिं विशिष्याह न जन्मेति। महतो वंशाज्जन्म महतः श्रीरामस्येति वा। तैः सज्जन्मादिभिर्लक्ष्मणस्य सर्वसल्लक्ष्मपरिपूर्णस्य सुमित्रासूनोरग्रजोऽग्रजत्वेन तमपि दास्ये विदधानोऽस्मान् सर्वसल्लक्षण-रहितानपि सख्ये चकारेति सुग्रीवमुपलक्ष्योक्तिः ॥ ७ ॥ ❀ ❀ तस्माद्भजनीयेषु सर्वेष्ववतारेषु मध्ये राम एव कृपासिन्धुर-तिशयेन भजनीयो यद्भजने सर्व एवाविशेषेणाधिकारीत्याह। सुर इति यः कोऽपि सर्वात्मना सर्वप्रकारेण उत्तरान् कोसलान् अयो-ध्यावासिनः सशरीरानेव दिवं वैकुण्ठम् ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एकोनविंशे किंपुरुषे भारते च सेव्यसेवकभावः भारतश्रैष्ठ्यं च वर्ण्यते किंपुरुषवर्षे इति ॥ १ ॥ ❀ ❀ आर्ष्टिषेणो गन्धर्वमुख्यस्तेन राजर्षिरप्यार्ष्टिषेणस्तस्यां दिशि महाभारते प्रसिद्धस्तेन सह वा भर्ता चासौ भगवांश्च तत्कथाम् ॥ २ ॥ ❀ ❀ आर्य्याणि उत्तमानि लक्षणानि शीलं व्रतञ्च यस्मिन् तस्मै उपशिक्षितानां सदनुशिष्टानामात्मोपास्यस्तस्मै उपासितः धर्मशिक्षार्थम-नुसृतो लोको येन तस्मै साधुवादस्य साधुत्वप्रसिद्धेर्निकषणाय परीक्षास्थानाय धर्मधुरन्धरशिरोभूषणायेत्यर्थः ॥ ३ ॥ ❀ ❀ उक्तगुणगणनिधिं वेदान्तैकवेद्यं श्रीरामाख्यं ब्रह्मैव मुमुक्षुध्येयमित्याह यदिति। यदेकं निःसमानातिशयं वस्तु तत्प्रपद्ये कीदृशं विशुद्धानां ध्यातॄणामनुभवो ययोस्ते मात्रे नामरूपे यस्य तत् अप्राकृतनामरूपमित्यर्थः, स्वतेजसा ध्वस्ता हेयाः गुणाः रागादयः विविधा अवस्था च यस्मात्तत् प्रत्यग् जीवः शान्तः यस्मात् स्मरणीयात्तत् सुधिया उपलभ्यते इत्युपलम्भनम्। अनामरूपं प्राकृत-नामरूपशून्यम् अहमेवंभूतोऽस्मीत्यभिमानशून्यम् ॥ ४ ॥ ❀ ❀ एवंभूतस्य मर्त्येषु अवतारस्तु रक्षोवधाय न केवलं मर्त्यशिक्षण-मपि तु मर्त्यचेष्टानुकरणेन मर्त्यैरेवं यथाशक्ति गुर्वाज्ञानुपालनस्वदारसन्तोषधार्मिकजनानुग्रहादिकं कर्तव्यमिति शिक्षार्थमित्यर्थः। अन्यथा मर्त्यानुकरणं विना आत्मनः सर्वात्मनः स्वे स्वासाधारणे निजानन्दे रमतः सीताविरहकृतानि व्यसनानि कुतः स्युः ॥ ५ ॥ ❀ ❀ एतदेवोपपादयति नेति। त्रिलोक्यामनित्यविभूतौ न सक्तः यतो वासुदेवो भगवान् अत एव स्त्रीकृतं शूर्पणखाकृतं कश्मलं सीताविरहादिरूपं नाऽनुवीत लक्ष्मणं विहातुं च नार्हति। एवं हि श्रीरामायणे कथा एकदायोध्यायां यथासुखं वर्तमानं श्रीराममेकान्ते सम्मन्त्रयता देवदूतेन विज्ञापितमत्रागतस्त्वया वध्य इति तदैव द्वारि स्थितं लक्ष्मणं दुर्वाससमागतं विज्ञा-पयितुं प्रविष्टं दृष्ट्वा सत्यप्रतिज्ञः प्राणादपि प्रियतरं भ्रातरं हन्तुमुद्यतस्तदा बन्धुपरित्यागोऽपि वध एवातो लक्ष्मणं त्यक्त्वा सत्यप्रतिज्ञ एवेति वसिष्ठवाक्यात्तत्याज, तदुभयं नरचेष्टानुकरणमन्तरेण न युज्येतेत्यर्थः ॥ ६ ॥ ❀ ❀ सौभगं सौन्दर्यम् आकृतिर्जातिः तैर्जन्मादिभिर्विसृष्टांस्त्यक्तान् ॥ ७ ॥ ❀ ❀ अतः सुरादिः यः कश्चित्सुधन्यो वा राममेव भजेतेत्यन्वयः। उत्तरान् कोसलान् अयोध्यावासिनः ॥ ८ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

रामसेवादिगंगादियोगेनैवोनविंशके। किम्पुरुषस्य चोत्कर्षो भारतस्योपवर्ण्यते ॥ १ ॥

किम्पुरुषसञ्ज्ञके वर्षे भगवदुपासनं दर्शयति—किम्पुरुष इति। किम्पुरुषे वर्षे भगवन्तं किम्पुरुषैः सह हनूमानुपास्ते इत्यन्वयः। को वा भगवान् यमुपास्ते तत्राह—आदिपुरुषमिति, सर्वकारणकारणमित्यर्थः। किंस्वरूपमित्यपेक्षायामाह—लक्ष्मण-

स्याग्रजं ज्येष्ठं भ्रातरं सीताया अभिरामं पतिं श्रीरामचंद्रमित्यर्थः। किमर्थमुपास्ते इत्यपेक्षायामाह–तच्चरणयोरिति, तस्य भगवतश्चरणयोः सन्निकर्षे सेवायामेवाभिरतः, न ततः फलान्तराभिलाषीत्यर्थः। तथा सेवाभिरतौ हेतुमाह—परमभागवत इति। तस्य किं लक्षणमित्यपेक्षायामाह—अविरतेति, अविरता फलाभिसन्धिराहित्येन विघ्नैरनुपहता भक्तिर्यस्य सः ॥ १ ॥ ❀ ❀ तस्योपासनप्रकारमाह—आर्ष्टिषेणेनेति। गन्धर्वैरनुगीयमानां परमकल्याणीं प्रार्थनां विनैव श्रोतृवक्तॄणां सर्वपुरुषार्थहेतुभूतां मनोहरां भर्तृभगवत्कथां भर्ता चासौ भगवांश्च यस्य कथामार्ष्टिषेणनामकेन किम्पुरुषमुख्येन सह सम्यक् सावधानतया उपश्रृणोति स्वयं चेदं मन्त्रादिकं गायति ॥ २ ॥ ❀ ❀ मन्त्रमाह—ओं नम इति। भगवते महाराजाय नम इत्यन्वयः। कथं तस्य भगवत्त्वं महाराजत्वं वेत्यपेक्षायां तदुभयमुपपादयति विशेषणैः—उत्तमाः श्रेष्ठाः मनोहराः श्लोकाः कवीनां पद्यानि यस्मिन् स तथा तस्मै। यद्वा—उत्तमसः तमसोऽज्ञानस्य निवर्त्तकाः श्लोका यशांसि यस्य तस्मै। आर्याणां श्रेष्ठानां लक्षणानि शीलं सुस्वभावः व्रतमाचारश्च यस्मिन् स तथा तस्मा इत्युत्तमश्लोकत्वे हेतुरुक्तः। उपशिक्षितो विषयेभ्यो व्यावर्त्तितो वशीकृत आत्माऽन्तःकारणं येन तस्मै। अत एव उपासितोऽनुसृतो लोकैर्यः स तथा तस्मै। यद्वा नैवं प्रतीयते शोकविलापादिदर्शनादित्याशङ्क्याह—उपासितोऽनुसृतो लोको येन तस्मै। शोकविलापादि तु लोकानुकरणमात्रं न वास्तवमिति भावः। साधुवादनिकषणाय साधुवादो लोके साधुत्वप्रसिद्धिस्तस्य निकषणाय स्वर्णसाधुत्वनिर्धारणार्थनिकषाश्मवन्निर्धारणस्थानाय यथा निकषं प्राप्तस्यैव कनकस्य लोके साधुत्वप्रसिद्धिस्तथा श्रीरामं प्राप्तानां सत्यसङ्कल्पादिगुणानामपि साधुत्वप्रसिद्धिरित्यर्थः। ब्रह्मण्यदेवाय ब्रह्मण्यः लोकसङ्ग्रहार्थं ब्राह्मणभक्तः देवः वस्तुतस्तु परमेश्वर एव स चासौ स तस्मै। यद्वा ब्रह्मण्यो ब्रह्मनिष्ठः गुणाध्यासरहितो देवस्तथापि क्रीडापरः स चासौ स च तस्मै। सर्वत्र हेतुः—महापुरुषायेति, पुरुषोत्तमायेत्यर्थः। यद्यपि जनापवादभीतिशोकविलापादिमोहलीलाबहुत्ववतः श्रीरामस्य सत्त्वप्रधानरजोगुणत्वं अवसीयते, तथाप्ययोगोलके वह्नेः सङ्क्रमणमिव अधिष्ठानभूते गुणे सच्चिदानंदस्य भगवतः सङ्क्रमणमेवावतारत्वम्। तथा च गुणाभिभूतस्य स्वतन्त्रस्य सर्वदा स्वरूपानन्दानुभवतोऽनेकविधलीलां कुर्वतोऽपि भगवत्त्वे न शङ्कालेश इति भावः। इति शब्दो मन्त्रसमाप्तिद्योतकः ॥ ३ ॥ ❀ ❀ स्तोत्रमाह पञ्चभिः, तत्र परमार्थरूपेण श्रीरामं प्रणमति—यदिति यदेकमद्वितीयं तत्त्वं वेदान्तेषु प्रसिद्धं तदहं प्रपद्ये शरणं व्रजामीत्यन्वयः। तत्कथम्भूतमित्यपेक्षायामाह—विशुद्धेति, विशुद्धश्चासावनुभवश्च स एव मात्रा स्वरूपं यस्य तत्। अत्र विशुद्धपदं विषयानुभवव्यावृत्त्यर्थम्। विशुद्धत्वे हेतुमाह—प्रशान्तमिति, कामरागादिविकारशून्यमित्यर्थः। तत्रापि हेतुमाह—स्वतेजसेति, स्वतेजसा स्वरूपप्रकाशेनैव ध्वस्ता दूरतो निरस्ता गुणानां विविधा जाग्रदाद्यवस्था यस्मिंस्तत्। जाग्रदाद्यवस्थावतो हि रागादिविकारप्रसिद्धेः, इदं तु तद्रहितमिति न तथेति भावः। ननु जाग्रदाद्यवस्थाराहित्यमपि तस्य कुत इत्यपेक्षायामाह—निरहमिति, जाग्रदाद्यवस्थानम् अन्तःकरणाध्यासलक्षणाहङ्कारपूर्वकत्वात्, अहङ्कारशून्यस्य ताः कथं स्युरित्यर्थः। तदेव कुतस्तत्राह—प्रत्यगिति, सर्वान्तरत्वेन अन्तःकरणसाक्षिमात्रमित्यर्थः। तत्रापि हेतुमाह—हीति, हि यस्मान्नामरूपात्मकात् प्रपञ्चाद्भिन्नमित्यर्थः। ननु श्रीरामस्य रूपं तु नैवं प्रतीयते इत्याशङ्क्याह–सुधियेति, सुष्ठु जन्मान्तरसहस्रेषु योगध्यानादिभिः शोधिता धीः बुद्धिर्यस्य तेनोपलभ्यते इति। तथा तदेवम्भूतोपलम्भसाधनभूतस्य 'दृश्यते त्वग्र्यया बुद्ध्या' 'मनसैवानुद्रष्टव्यः' इत्यादिप्रमाणसिद्धस्य बुद्धिशुद्धत्वस्याभावात् कथमेवमुपलभ्येत ? शुद्धचित्तेन त्वेवमुपलभ्यत एवेति भावः ॥ ४ ॥ ❀ ❀ नन्वेवम्भूतः परमेश्वरश्चेद्रामस्तदा तस्य सङ्कल्पमात्रेणैव अनन्तकोटिब्रह्माण्डरचनसामर्थ्यसत्त्वेन सङ्कल्पमात्रेणैव रावणवधादिकार्यस्य सुशक्यत्वात् कुतोऽतितुच्छकार्यार्थं मनुष्यावतारग्रहणमित्याशङ्क्याह—मर्त्येति। विभोः सङ्कल्पमात्रेणैव सर्वं कर्तुं समर्थस्यापि मनुष्यावतारो न केवलं रक्षोवधायैव, किन्त्विह संसारे विषयाविष्टानां स्त्रीसङ्गादिकृतं दुःखं दुर्वारं तथा धार्मिकैः साध्वी भार्या सर्वथैव नोपेक्षितव्या तदर्थं प्राप्तानि दुःखानि सोढव्यानि स्वभक्तभक्तिपरवशो भगवान् भक्तदुःखेनैवं दुःखितो भवतीति मर्त्यानां शिक्षणं च शिक्षार्थमपीत्यर्थः। नन्वेतदर्थमवतार इत्यत्र किं प्रमाणमित्याशङ्क्य तत्रार्थापत्तिप्रमाणमाह—कुत इति। अन्यथा शिक्षार्थत्वानङ्गीकारे स्वे स्वरूपे रममाणस्य सर्वात्मनः परमेश्वरस्य सीताविरहकृतानि व्यसनानि दुःखानि कुतः स्यात् स्युरित्यन्वयः ॥ ५ ॥ ❀ ❀ तस्येश्वरत्वेन विषयासक्तिशून्यत्वात् व्यसनस्य च विषयासक्त्यधीनत्वात् तदासक्त्यभावे व्यसनानां सम्भवाल्लोकशिक्षार्थमेव विलापदुःखित्वादिनाट्यमात्रमेव, न वास्तवमिति वदन् पूर्वोक्तमेव द्रढयति—न वा इति। यतः स श्रीरामस्त्रिलोक्यां क्वापि विषये नैवासक्तोऽतः स्त्रीकृतं कश्मलं सीतावियोगकृतमोहेन दुःखं नाश्नुवीत नैव प्राप्नुयात्, विषयानासक्तस्य तदसम्भवादिति शिक्षार्थं तद्विडम्बनमात्रमेवेत्यन्वयः। अनासक्तौ हेतुमाह—भगवानिति, यत ऐश्वर्यादिषड्गुणपूर्णः। औपचारिकं भगवत्त्वं त्वन्यत्राप्यस्तीति तद्वारणायाह—वासुदेव इति। न चैतत्सञ्ज्ञामात्रमेव, किन्तु वसति सर्वत्रेति वासुः स एव नानारूपेण दीव्यति क्रीडतीति देव इति व्युत्पत्त्याऽपि वासुदेवसञ्ज्ञक इत्याशयेनाह—आत्मेति, सर्वस्वरूपः सर्वव्यापकश्चेत्यर्थः। किञ्च न लक्ष्मणं चापि विहातुमर्हतीति, देवदूतेन श्रीरामं मन्त्रयता विज्ञापितमावयोः संवदतोरत्र कश्चिदागतश्चेत्स त्वया वध्यः स्यादिति, श्रीरामेण तथाऽस्त्विति प्रतिज्ञातं, तदाऽन्तः कश्चिन्मा प्रविशत्विति लक्ष्मणं द्वारि संस्थाप्य तयोः संवदतोस्तदा दुर्वाससमागतं विज्ञापयितुं प्रविष्टं लक्ष्मणं हन्तुं राम उद्यतो जातः, पुनर्वसिष्ठवाक्यात्तं तत्याजेति वाल्मीकीये प्रसिद्धं तच्च सत्यसङ्कल्पत्वब्रह्मण्यत्वादिशिक्षार्थमेव, अन्यथा तत्कर्तुमपि स नार्हति तदपि न युज्यते, ईश्वरत्वेन प्रतिज्ञाहान्यादिनिमित्तदोषासम्भवादित्यर्थः। नन्वेवं लोकशिक्षामपि किमर्थं करोतीत्याशङ्क्याह—आत्मवतामिति, सर्वप्राणिनां सुहृत्तमः हितकर इत्यर्थः। प्राणिकल्याणार्थमेवैवं

शिक्षयति, न तेन तस्य किञ्चित् फलमस्तीति भावः ॥ ६ ॥ ❀ ❀ एवमैश्वर्यादिगुणवान् परमेश्वर एव चेद्रामस्तदा सत्कुलजन्मादिगुणवतामेव तद्भजनेऽधिकारो न जन्मादिगुणहीनानां तच्छून्यत्वेन तस्य सन्तोषाभावात् भजनस्य विफलत्वापत्तेरित्याशङ्क्य न सत्कुलजन्मादि तस्य सन्तोषहेतुः, किन्तु भक्तिरेव निरुपाधिकृपासमुद्रत्वात् अतः सर्वैः स एव भजनीय इत्याह—नेति। नूनं निश्चितमेतत् महतः श्रीरामस्य सन्तोषहेतुः, सत्कुलजन्मादि न भवतीत्यन्वयः। कुत एवं निश्चितमित्यपेक्षायामाह—तैर्यदिति। यत् यस्मात् लक्ष्मणस्य सत्कुलजन्माद्यनेकलक्षणविशिष्टस्य अग्रजोऽग्रजत्वेन तेन सेव्यमानोऽपि तैर्गुणैर्विसृष्टानि त्यक्तानि नोऽस्मान् वनौकसो वानरान् सख्ये चकार सखित्वेन अङ्गीकृतवानित्यन्वयः। ननु सीतान्वेषणादिकार्यार्थं सख्यं कृतवांस्तेन किमाश्चर्यमित्याशङ्क्य सर्वज्ञस्य सहायान्तरं विनैवानन्तब्रह्माण्डकर्तुरन्यसहायानपेक्षणात् केवलं कृपैव सख्यकरणे हेतुर्नान्यदिति तत्कृपाया आश्चर्यमेवेत्याह—बतेति। जन्म सत्कुले, सौभगं सौन्दर्यम्, वाक् वाङ्माधुर्यम्, बुद्धिर्बुद्धिनैपुण्यम्, आकृतिर्जातिः ॥ ७ ॥ ❀ ❀ अथ तस्मात् सुरो देवोऽसुरो वा नरो मनुष्योऽनरो नरेतरः पशुपक्ष्यादियैः कोऽपि वा सर्वात्मना कायवाङ्मनोभिः यथासम्भवश्रवणादिसर्वप्रकारेण श्रीराममेव भजेत। तद्भजने किं फलं स्यादित्यपेक्षायां सर्वदुःखनिवृत्तिरित्यभिप्रेत्य विशिनष्टि—मनुजाकृतिं हरिं सर्वदुःखहर्तारम्। भक्तदुःखहारित्वमेव दर्शयति—य इति, यः कोसलानयोध्यावासिनः सर्वान् पशुपक्ष्यादीन् तिर्यग्योनिगतानपि जीवान् दिवं ब्रह्मलोकादुपरि वर्त्तमानं क्रममुक्तिस्थानं सान्तानिकं नाम लोकमनयत्। यथोक्तं वाल्मीकीये—'लोकान् सान्तानिकान्नाम यास्यन्तीमे समागताः' इति। दुःखहारित्वे हेतुमाह—सुकृतज्ञमिति, यतो भक्तानां सुकृतं भजनमेव जानाति, अपराधं तु नैवानुसन्धत्ते इत्यर्थः। तत्रापि हेतुमाह—उत्तममिति। उत्तमो हि परेषु गुणानेव गृह्णाति न दोषानतः सर्वोत्तमः कथं भक्तानुपेक्षेतेति भावः ॥ ८ ॥

### श्रीभगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

**वर्षे किंपुरुषे चोनविंशे भारत उच्यते। सेव्यसेवकताश्रैष्ठ्यं भारतस्यापि सर्वतः ॥ १ ॥**

किंपुरुषे वर्षे उपास्यां भगवत्तनुं तदुपासकं जप्यमन्त्रं स्तोत्रं चाह किंपुरुष इति। किंपुरुषे वर्षे, आदिपुरुषं जगत्कारणभूतं परमपुरुषं लक्ष्मणस्य सौमित्रेरग्रजो ज्येष्ठस्तं, सीताया मैथिल्या अभिरामोऽनुरूपस्तं रामं भगवन्तं, श्रीदाशरथिं परमेश्वरमित्यर्थः। तस्य श्रीरामस्य यौ चरणौ तयोः संनिकर्षः सांनिध्यं भजनमिति यावत्। तस्मिन्नभिरत आसक्तः। परमभागवतो महाभागवतः, अविरता अविच्छिन्ना भक्तिर्यस्य सः, हनूमान् किंपुरुषैः किंपुरुषवर्षस्थजनैः सह, उपास्ते सेवते ॥ १ ॥ ❀ ❀ आर्ष्टिषेणेनेति। आर्ष्टिषेणः किंपुरुषवर्षस्थः श्रेष्ठो जनस्तेन, आर्ष्टिषेणो मुनिरित्यन्ये। आर्ष्टिषेणो जाम्बवानित्यपरे। सह गन्धर्वैः, अनुगीयमानां परमकल्याणीं भर्त्ता चासौ भगवांश्च तस्य कथां तां समुपशृणोति। स्वयं च इदं वक्ष्यमाणम् उपोपांशु गायति जपति ॥ २ ॥ ❀ ❀ ॐ नम इति। ओमिति पूर्ववत्। उत्तमैर्ब्रह्मादिभिः श्लोक्यते स्तूयते इत्युत्तमश्लोकस्तस्मै, उत्तमो निरतिशयः श्लोको यशो यस्येति वा तस्मै नमः। आर्याणि आर्याणां वा लक्षणानि शीलानि व्रतानि च यस्मिंस्तस्मै, भगवते नमः। उपशिक्षितः संयत आत्मा चित्तं यस्य तस्मै नमः। उपासित उपाश्रितो लोको येन तस्मै, नमः साधुवादः साधुत्वप्रसिद्धिस्तस्य निराकर्षणः निकषाश्मवन्निर्द्धारस्थानं तस्मै, ब्रह्मणि ब्राह्मणकुले साधुर्ब्रह्मण्यः स चासौ देवश्च तस्मै नमः। महापुरुषाय परमपुरुषाय, महाराजो राजाधिराजस्तस्मै नमः। नमःपदावृत्तिर्गुणभेदाभिप्राया। इति मन्त्रः ॥ ३ ॥ ❀ ❀ प्रकृतिपुरुषविलक्षणपरमात्मस्वरूपं विशोध्य तच्छ्रीरामरूपेणावस्थितं नमस्करोति यदिति। हे राम, यत् तव स्वरूपमिति शेषः। विशुद्धानुभवमात्रं प्रकृतिसंबन्धरहितज्ञानात्मकेन्द्रियादिमत् स्वतेजसा स्वस्वरूपसामर्थ्येन ध्वस्ता निरस्ताः गुणाः सत्त्वादयः त्र्यवस्था जाग्रदाद्यास्तिस्रोऽवस्थाश्च येन तथाभूतं, प्रत्यक् स्वाश्रितजीवाभिमुखमवस्थितं, प्रशान्तं प्रसन्नाकारं सुधिया शोभनधीमता उपलभ्यते इति सुधियोपलम्भनं, अनामरूपं प्राकृतनामरूपवर्जितं निरहमहंकृतिशून्यं अत एव, एकमद्वितीयं तत् प्रपद्ये हि ॥ ४ ॥ ❀ ❀ एवंभूतस्य कथं तर्हि दशरथपुत्रत्वं तत्राह मर्त्त्यावतार इति। विभोः पूर्वोक्तप्रकारस्यास्य भगवतः, मर्त्त्यावतारः मनुष्येषु मर्त्त्यभावेनात्मप्रदर्शनं त्वित्यर्थः। रक्षोवधाय रावणविनाशाय एव। तस्य मनुष्यादन्यतोऽवध्यत्वात्। तर्हि किमेतदर्थमेव नेत्याह। न केवलं, नैतावदेव केवलं प्रयोजनं, किं त्वन्यदपि तत्प्रयोजनमस्तीत्यर्थः। तदाह इह संसारे, मर्त्त्यशिक्षणं मर्त्त्यानां शिक्षार्थं च, अत्र स्त्रीसङ्गादिकृतं दुःखं मर्त्यानां दुर्निवारमिति शिक्षार्थमपीत्यर्थः। अन्यथोक्तकारणार्थमवतारधारणं न चेत्, स्वे स्वकीये, आत्मनि स्वरूपे, रमतो रममाणस्य ईश्वरस्य सीताकृतानि सीताविरहजातानि, व्यसनानि कुतः स्युः। सर्वनियन्तुः सर्वान्तरात्मनः स्वानुभवसंतुष्टस्य श्रीरामरूपेणावस्थितस्य परब्रह्मणः सीताविश्लेषादिकृतव्यसनानुकरणं निरतिशयदुःखावहः संसार इति लोकस्य प्रदर्शयितुमेवान्यथोक्तविधस्य तस्य सीताकृतव्यसनस्वीकरणं न घटत एवेति भावः ॥ ५ ॥ ❀ ❀ अथास्य विषयासक्त्यभावेन व्यसनानर्हत्वमुपपादयति न वै इति। आत्मवतां निरस्तनिखिलसांसारिकधर्माणां सनकादीनां, आत्मा निरतिशयप्रीतिविषयः, सुहृत्तमः निरतिशयसौहार्दनिष्ठः, भगवान् षाड्गुण्यपूर्णः, वासुदेवः सर्वान्तरात्मतयावस्थितत्वेऽपि तत्तद्दोषैरसंस्पृष्टः, सः श्रीरामरूपेणावस्थितः परमात्मा, त्रिलोक्यां क्वापि न सक्तः वै। अत एव स्वोक्तं स्त्रीविश्लेषादिकृतं कश्मलं दुःखं, न अश्नुवीत मर्त्त्यशिक्षणार्थं न

प्रादुर्भूतः स्याचेन्न प्राप्नुयात्। तथा च लक्ष्मणं विहातुं त्यक्तुं अपि, न अर्हति। चकारात्सीतामपि त्यक्तुं नार्हति। 'भवांस्तु सह वैदेह्या गिरेः सानुषु रंस्यताम्। अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते॥ कुरुष्व मामनुचरं वैधर्म्यं नैव विद्यते। कृतार्थोऽहं भविष्यामि तव चार्थप्रकाशनात्' इत्युक्तवतः निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिकं स्वानुचरवत्कृतवतो लक्ष्मणस्य त्यागं, तथा 'नित्यैव सा जगन्माता लक्ष्मीर्नित्यानपायिनी। राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि॥ अन्येष्वप्यवतारेषु विष्णोरेषानपायिनी' इति वाक्याल्लक्ष्म्यवताररूपाया भगवत्याः सीतायाश्च त्यागं मर्त्यशिक्षणमन्तरा स कर्तुं नार्हत्येव। 'मित्रभावेन संप्राप्तं न त्यजेयं कथंचन। अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम' इति स्ववाक्यं च मृषा न कुर्यात्। देवदूतेन श्रीरामं मन्त्रयता विज्ञापितं 'अत्रागतस्त्वया वध्यः' इति तदैव द्वारि स्थितं लक्ष्मणं दुर्वाससमागतं विज्ञापयितुं प्रविष्टं हन्तुमुद्यतो वसिष्ठवाक्यात्त्याजेति लक्ष्मणत्यागनिमित्तं प्रदर्शितस्वशुद्धताया अपि सीतायाः परित्यागनिमित्तं तु हतकरजकवचनश्रवणमेवेति सर्वं जनशिक्षणमेव॥ ६॥ ❀ ❀ तारतम्यमनादृत्य यत्स्वाश्रितत्वमात्रेण निरतिशयप्रीतिविशिष्टत्वं तदस्मिन्नेवावतारे दर्शयति नेति। महतः शरणागतशब्दभाक् हीनजातिविशिष्टोऽपि पापीयानपि रक्षितव्य इति कृतप्रतिज्ञापूर्वं श्रीरामरूपेण प्रादुर्भूतस्य परब्रह्मणः श्रीरामस्येत्यर्थः। जन्म विप्रादेः सत्कुले जन्म तोषहेतुः न। सौभगं सौन्दर्यातिशयः न। वाक् शास्त्राध्ययनं न। बुद्धिः सन्मतिः न। आकृतिर्जातिः न। तोषहेतुर्न भवतीत्यर्थः। नूनम्। तिर्यक्ष्वपि तस्यानुग्रहदर्शनादिति भावः। यद्यस्मात् तैर्जन्मादिभिः विसृष्टांस्त्यक्तानपि, वनौकसो वनचरान्, नोऽस्मान् बत अहो लक्ष्मणाग्रजः यः एकबाणेनानन्तब्रह्माण्डविनाशं निमेषमात्रेण कुर्यात्तथाविधलक्ष्मणस्याग्रजन्मा सन्नपि सख्ये चकार सखित्वेन कृतवान्॥ ७॥ ❀ ❀ सुर इति। यत एवायं निरतिशयसुहृत्तमस्ततः, सुरो देवः, असुरो दैत्यो वा अथ वानरः कपिः, नरो मनुष्यो वा यः कोऽपि सर्वात्मना सर्वप्रकारेण सुकृतज्ञमल्पीयसि अपि भजने बहुमानिनं, यद्वा सुकृतज्ञमुपकारज्ञम् अत एव उत्तमं मनुजाकृतिं हरिं रामं भजेत। येन केनापि प्रकारेण तदनुग्राह्यतां संपाद्य सेवेतैवेत्यर्थः। कथं तावन्मात्रेण तमनुगृह्णाति तत्राह। यः श्रीरामः उत्तरान् कोसलान् उत्तरकोसलवासिनो लोकान् दिवं स्वर्गम् अनयत्। तरुगुल्मलतादींश्च स्वदेशवासित्वमात्रमवलम्ब्य दिवं प्रापितवान्। न केवलं ज्ञानक्रियाभक्तियोगानपेक्ष्यैवानुगृह्णात्ययं श्रीराम इति भाव इति॥ ८॥

## भाषानुवाद:

## किम्पुरुष और भारतवर्षका वर्णन

श्रीशुकदेवजी कहते हैं—राजन्! किम्पुरुषवर्षमें श्रीलक्ष्मणजीके बड़े भाई, आदि पुरुष, सीताहृदयाभिराम भगवान् श्रीरामके चरणोंकी सन्निधिके रसिक परम भागवत श्रीहनुमान्जी अन्य किन्नरोंके सहित अविचल भक्तिभावसे उनकी उपासना करते हैं॥ १॥ ❀ ❀ वहाँ अन्य गन्धर्वोंके सहित आर्ष्टिषेण उनके स्वामी भगवान् रामकी परम कल्याणमयी गुणगाथा गाते रहते हैं। श्रीहनुमानजी उसे सुनते हैं और स्वयं भी इस मन्त्र*का जप करते हुए इस प्रकार उनकी स्तुति करते हैं॥ २॥ ❀ ❀ 'हम ॐकारस्वरूप, पवित्रकीर्ति भगवान् श्रीरामको नमस्कार करते हैं, आपमें सत्पुरुषोंके लक्षण, शील और आचरण विद्यमान हैं; आप बड़े ही संयतचित्त, लोकाराधनतत्पर, साधुताकी परीक्षाके लिये कसौटीके समान और अत्यन्त ब्राह्मणभक्त हैं। ऐसे महापुरुष महाराज रामको हमारा पुनः-पुनः प्रणाम है'॥ ३॥ ❀ ❀ 'भगवन्! आप विशुद्ध बोधस्वरूप, अद्वितीय, अपने स्वरूपके प्रकाशसे गुणोंके कार्यरूप जाग्रदादि सम्पूर्ण अवस्थाओंका निरास करनेवाले, सर्वान्तरात्मा, परम शान्त शुद्ध बुद्धिसे ग्रहण किये जाने योग्य, नाम-रूपसे रहित और अहङ्कारशून्य हैं; मैं आपकी शरणमें हूँ॥ ४॥ ❀ ❀ प्रभो! आपका मनुष्यावतार केवल राक्षसोंके वधके लिये ही नहीं है, इसका मुख्य उद्देश्य तो मनुष्योंको शिक्षा देना है। अन्यथा अपने स्वरूपमें ही रमण करनेवाले साक्षात् जगदात्मा जगदीश्वरको सीताजीके वियोगमें इतना दुःख कैसे हो सकता था॥ ५॥ ❀ ❀ आप धीर पुरुषोंके आत्मा† और प्रियतम भगवान् वासुदेव हैं; त्रिलोकीकी किसी भी वस्तुमें आपकी आसक्ति नहीं है। आप न तो सीताजीके लिये मोहको ही प्राप्त हो सकते हैं और न लक्ष्मणजीका त्याग ही कर सकते हैं‡॥ ६॥ ❀ ❀ आपके ये

---

* ॐ नमो भगवते उत्तमश्लोकाय नम आर्यलक्षणशीलव्रताय नमः उपशिक्षितात्मन उपासितलोकाय नमः साधुवादनिकषणाय नमो ब्रह्मण्यदेवाय महापुरुषाय महाराजाय नमः इति।

† यहाँ शङ्का होती है कि भगवान् तो सभीके आत्मा हैं, फिर यहाँ उन्हें आत्मवान् ( धीर ) पुरुषोंके ही आत्मा क्यों बताया गया? इसका कारण यही है कि सबके आत्मा होते हुए भी उन्हें केवल आत्मज्ञानी पुरुष ही अपने आत्मारूपसे अनुभव करते हैं—अन्य पुरुष नहीं। श्रुतिमें जहाँ-कहीं आत्मसाक्षात्कारकी बात आयी है, वहीं आत्मवेत्ताके लिये 'धीर' शब्दका प्रयोग किया है। जैसे 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत' इति 'नः शुश्रुम धीराणाम्' इत्यादि। इसीलिये यहाँ भी भगवान्को आत्मवान् या धीर पुरुषकी आत्मा बताया है।

‡ एक बार भगवान् श्रीराम एकान्तमें एक देवदूतसे बात कर रहे थे। उस समय लक्ष्मणजी पहरेपर थे और भगवान्की आज्ञा थी कि यदि इस समय कोई भीतर आवेगा तो वह मेरे हाथसे मारा जायगा। इतनेमें ही दुर्वासा मुनि चले आये और उन्होंने लक्ष्मणजीको अपने

व्यापार केवल लोकशिक्षाके लिये ही हैं ! लक्ष्मणाग्रज ! उत्तम कुलमें जन्म, सुन्दरता, वाक्चातुरी, बुद्धि और श्रेष्ठ योनि—इनमें से कोई भी गुण आपकी प्रसन्नताका कारण नहीं हो सकता, यह बात दिखानेके लिये ही आपने इन सब गुणोंसे रहित हम वनवासी वानरोंसे मित्रता की है ॥ ७ ॥ ❀ ❀ देवता, असुर, वानर अथवा मनुष्य—कोई भी हो, उसे सब प्रकारसे श्रीरामरूप आपका ही भजन करना चाहिये; क्योंकि आप नररूपमें साक्षात् श्रीहरि ही हैं और थोड़े कियेको भी बहुत अधिक मानते हैं ! आप ऐसे आश्रितवत्सल हैं कि जब स्वयं दिव्यधामको सिधारे थे, तब समस्त उत्तरकोसलवासियोंको भी अपने साथ ही ले गये थे ॥ ८ ॥

भारतेऽपि वर्षे भगवान्नरनारायणाख्य आकल्पान्तमुपचितधर्मज्ञानवैराग्यैश्वर्योपशमोपरमात्मोपलम्भनमनुग्रहायात्मवतामनुकम्पया तपोऽव्यक्तगतिश्चरति ॥ ९ ॥ तं भगवान्नारदो वर्णाश्रमवतीभिर्भारतीभिः प्रजाभिर्भगवत्प्रोक्ताभ्यां सांख्ययोगाभ्यां भगवदनुभावोपवर्णनं सावर्णेरुपदेक्ष्यमाणः परमभक्तिभावेनोपसरति इदं चाभिगृणाति ॥ १० ॥ ॐ नमो भगवते उपशमशीलायोपरतानात्म्याय नमोऽकिञ्चनवित्ताय ऋषिऋषभाय नरनारायणाय परमहंसपरमगुरवे[1] आत्मारामाधिपतये नमो नम इति ॥ ११ ॥ गायति चेदम्—

कर्तास्य सर्गादिषु यो न बध्यते न हन्यते देहगतोऽपि दैहिकैः ।
द्रष्टुर्न दृग्यस्य गुणैर्विदूष्यते तस्मै नमोऽसक्तविविक्तसाक्षिणे ॥ १२ ॥
इदं हि योगेश्वर योगनैपुणं हिरण्यगर्भो भगवाञ्जगाद यत् ।
यदन्तकाले त्वयि निर्गुणे मनो भक्त्या दधीतोज्झितदुष्कलेवरः ॥ १३ ॥
यथैहिकामुष्मिककामलम्पटः सुतेषु दारेषु धनेषु चिन्तयन् ।
शङ्केत विद्वान् कुकलेवरात्ययाद् यस्तस्य यत्नः श्रम एव केवलम् ॥ १४ ॥
तन्नः प्रभो त्वं कुकलेवरार्पितां त्वन्माययाहंममतामधोक्षज ।
भिन्द्याम येनाशु वयं सुदुर्भिदां विधेहि योगं त्वयि नः स्वभावमिति ॥ १५ ॥

भारतेऽप्यस्मिन् वर्षे सरिच्छैलाः सन्ति बहवो मलयो मङ्गलप्रस्थो मैनाकस्त्रिकूट ऋषभः कूटकः कोल्लकः[2] सह्यो देवगिरिर्ऋष्यमूकः श्रीशैलो वेङ्कटो[3] महेन्द्रो वारिधारो विन्ध्यः शुक्तिमानृक्षगिरिः पारियात्रो द्रोणश्चित्रकूटो गोवर्धनो रैवतकः ककुभो नीलो गोकामुख[4] इन्द्रकीलः कामगिरिरिति चान्ये च शतसहस्रशः शैलास्तेषां नितम्बप्रभवा नदा नद्यश्च सन्त्यसङ्ख्याताः ॥ १६ ॥

अन्वयः—भारते वर्षे अपि भगवान् नरनारायणाख्यः अव्यक्तगतिः अनुकंपया आत्मवताम् अनुग्रहाय आकल्पान्तम् उपचितधर्मज्ञानवैराग्यैश्वर्योपशमोपरमात्मोपलम्भनम् तपः चरति ॥ ९ ॥ ❀ ❀ सावर्णेः भगवदनुभावोपवर्णनम् उपदेक्ष्यमाणः भगवान् नारदः वर्णाश्रमवतीभिः भारतीभिः प्रजाभिः तम् भगवत्प्रोक्ताभ्याम् सांख्ययोगाभ्याम् परमभक्तिभावेन उपसरति इदम् च अभिगृणाति ॥ १० ॥ ❀ ❀ ॐ भगवते उपरतानात्म्याय अकिञ्चनवित्ताय ऋषिऋषभाय नरनायणाय नमः नमः परमहंसपरमगुरवे आत्मारामाधिपतये नमः नमः इति ॥ ११ ॥ ❀ ❀ इदम् च गायति यः अस्य सर्गादिषु कर्ता अपि न बध्यते देहगतः अपि दैहिकैः न हन्यते द्रष्टुः यस्य दृक् गुणैः न विदूष्यते तस्मै असक्तविविक्तसाक्षिणे नमः ॥ १२ ॥ ❀ ❀ योगेश्वर हिरण्यगर्भः भगवान् यत् यत् योगनैपुणम् जगाद इदम् हि उज्झितदुष्कलेवरः अंतकाले निर्गुणे त्वयि भक्त्या मनः आदधीत ॥ १३ ॥ ❀ ❀ ऐहिकामुष्मिककामलंपटः सुतेषु दारेषु धनेषु चिन्तयन् यथा विद्वान् कुकलेवरात्ययात् शंकेत तस्य यत्नः केवलम् श्रमः एव ॥ १४ ॥ ❀ ❀ तत् प्रभो अधोक्षज त्वम् नः प्रसीद वयम् त्वन्मायया कुकलेवरार्पिताम् सुदुर्भिदाम् अहंमम-

आनेकी सूचना देनेके लिये भीतर जानेको विवश किया। इससे अपनी प्रतिज्ञाके अनुसार भगवान् बड़े असमञ्जसमें पड़ गये। तब वसिष्ठजीने कहा कि लक्ष्मणजीके प्राण न लेकर उन्हें त्याग देना चाहिये; क्योंकि अपने प्रियजनका त्याग मृत्युदण्डके समान ही है। इसीसे भगवान्ने उन्हें त्याग दिया।

१. प्रा० पा०—परमगुरुवरायात्मारामा०। २. प्रा० पा०—कोल्लः। ३. प्रा० पा०—प्राचीने 'वेङ्कटो' इति पाठो न। ४. प्रा० पा०—कोकामुखः।